मेदव्यवहार एवोत्सीदेत्। तथा, एकस्मिन्नुदकपरमाणौ 'आपः' इति बहुत्वसङ्ख्याया निर्देशोऽनुपपन्नः न ह्येकत्वसङ्ख्यासमाध्यासितं तदेव तद्विरुद्धबहुत्वसङ्ख्योपेतं भवतीत्येकसङ्ख्ययैव तन्निर्देष्टव्यम्। कालभेदाद् वस्तुभेदः ऋजुसूत्रेणाप्यभ्युपगत एवेति 'अग्निष्टोमयाजी पुत्रोऽस्य जनिता' इत्ययुक्तमेव वचः अतीताऽनागतयोः सम्बन्धाभावात्। तथा, अन्यकारकयुक्तं यत् तदेव अपरकारकसम्बन्ध-(न्धं) नानुभवतीति अधिकरणं चेद् ग्रामः अधिकरणशब्दवाचि(करणवाचि)विभक्तिवाच्य एव ५ न कर्माभिधानविभक्त्यभिधेयो युक्त इति 'ग्राममधिशेते' इति प्रयोगोऽनुपपन्नः। तथा, पुरुषभेदेऽपि "नैकान्तद्(कं तद्)वस्तु इति 'एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पिता' इति च प्रयोगो न युक्तः अपि तु 'एहि मन्यसे यथाहं रथेन यास्यामि' इत्यनेनैव परभावेनैतन्निर्देष्टव्यम्। एवमुप-ग्रहणभेदेपि 'विरमति' इति न युक्तः आत्मार्थतायां हि 'विरमते' इत्यस्यैव प्रयोगसङ्गतेः। नं चै(चै)वं लोकशास्त्रव्यवहारविलोप इति वक्तव्यम्, सर्वत्रैव नयमते तद्विलोपस्य समानत्वादिति यथार्थशब्द- १० नात् शब्दे(ब्द)नयो व्यवस्थितः। तदुक्तम्—

"विरोधिलिङ्ग-सङ्ख्यादिभेदात् भिन्नस्वभावताम्।
तस्यैव मन्यमानोऽयं शब्दः प्रत्यवतिष्ठते" [ ]

## [ समभिरूढनयस्वरूपम् ]

एकसंज्ञासमभिरोहणात् समभिरूढस्त्वाह—यथा हि विरुद्धलिङ्गादियोगाद् भिद्यते वस्तु तथ १५ संज्ञाभेदादपि। तथाहि-संज्ञाभेदः प्रयोजनवशात् सङ्केतकर्तृभिर्विधीयते न व्यसनितया अन्यथा अनवस्थाप्रसक्तेः ततो यावन्तो वस्तुनः स्वाभिधायकाः शब्दास्तावन्तोऽर्थभेदाः प्रत्यर्थं शब्दनिवे-शात् नैकस्यार्थस्यानेकेनाभिधानं युक्तमिति 'घटः' 'कुटः' 'कुम्भः' इति वचनभेदाद् भिन्न एवार्थः, क्रियाशब्दत्वाद् वा सर्वशब्दानां सर्वेऽप्यन्वर्था एव वाचकाः ततो 'घटते' 'कुटति' 'को भाति' इति च क्रियालक्षणनिमित्तभेदात् नैमित्तिकेनाप्यर्थेन भिन्नेन भाव्यमिति 'घटः' इत्युक्ते कुतः 'कुटः' इति २० प्रतिपत्तिः तेन तदर्थस्यानभिहितत्वात्? यथा वा 'पावक'शब्दोक्तेरन्यैव पावकशक्तिरन्वय-व्यतिरे-काभ्यां लोकतः प्रसिद्धा तथा घटन-कुटनादिशक्तीनामपि भेदः प्रतीयत एवेति नानार्थवाचिन एव पर्यायध्वनयः नैकमर्थमभिनिविशन्त इति समभिरूढः। उक्तं च

"तथाविधस्य तस्यापि वस्तुनः क्षणवृत्तिनः।
ब्रूते समभिरूढस्तु संज्ञाभेदेन भिन्नताम्" ॥ [ ] २५

---

१ "धातुसंबन्धे प्रत्ययाः"-पाणि० अ० ३ पा० ४ सू० १। "सोमयाजी अस्य पुत्रो भविता"-सिद्धान्तकौ० पृ० ४७६ सूत्राङ्क० २८२४। "धातोः संबन्धे प्रत्ययाः"-हैम० अ० ५ पा० ४ सू० ४१। २ संबन्धे ना-आ० वि०। ३-शब्दवावि भां० मां० विना। ४ "अधिशीङ्-स्थाऽऽसां कर्म"-पाणि० अ० १ पा० ४ सू० ४६ सिद्धान्तकौ० पृ० १३७ सूत्राङ्क० ५४२। "अधेः शीङ्-स्थाऽऽस आधारः"-हैम० अ० २ पा० २ सू० २०। ५ नैकांतंवस्तु वा० बा० विना। ६ "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच"-पाणि० अ० १ पा० ४ सू० १०६ सिद्धान्तकौ० पृ० ३३५ सूत्राङ्क० २१६३। आचार्यहेमचन्द्रस्तु एतत् सूत्रमकृत्वैव एनं प्रयोगं समर्थितवान् भङ्ग्यन्तरेण, सा चेयं भङ्गिः-'एहि मन्ये रथेन यास्यसि न हि यास्यसि यातस्ते पिता' इति प्रहासे यथाप्राप्तमेव प्रतिपत्तिः नात्र प्रसिद्धार्थविपर्यासे किञ्चिन्निबन्धनमस्ति 'रथेन यास्यसि इति भावगमनाभिधानात् प्रहासो गम्यते। 'नहि यास्यसि' इति बहिर्गमनं प्रतिषिध्यते। अनेकस्मिन्नपि प्रहसितरि च प्रत्येकमेव परिहास इति अभिधानवशाद् 'मन्ये' इति एकवचनमेव। लौकिकश्च प्रयोगोऽनुसर्तव्य इति न प्रकारान्तरकल्पना न्याय्या"-"त्रीणि त्रीणि अन्य-युष्मदस्मदि"-हैम० अ० ३ पा० ३ सू० १७ बृ० वृ०। ७ ग्रहेण-भां० मां०। ८-णभेदोऽपि वा० बा० विना। ९-ताया हि वा० बा० विना। १०-नश्चैवं वा० बा०। नत्वेवं भां० मां०। ११-ति न च-वा० बा०। १२-रोधलि-आ० विना। "विरोधे लिङ्ग-सङ्ख्यादि"-न्यायाव० टिप्प० पृ० १२६ पं० २०। १३-ति को भा-आ०। १४-पाचक-वा० बा० आ०। १५ न्यायाव० टिप्प० पृ० १२७ पं० १८।

[ एवंभूतनयस्वरूपम् ]

शब्दाभिधेयक्रियापरिणतिवेलायामेव 'तद् वस्तु' इति भूत एवंभूतः प्राह—यथा संज्ञाभेदाद्
भेदवद् वस्तु तथा क्रियाभेदादपि, सा च क्रिया तद्भेत्री यदैव तामाविशति तदैव तन्निमित्तं तत्‌-
व्यपदेशमासादयति नान्यदेत्यतिप्रसङ्गात्। तथाहि—यदा 'घटते' तदैवासौ 'घटः' न पुनः 'घटि-
५ तवान्' 'घटिष्यते' वा 'घटः' इति व्यपदेष्टुं युक्तः सर्ववस्तूनां घटतापत्तिप्रसङ्गात्। अपि च, चेष्टा-
समय एव चक्षुरादिव्यापारसमुद्भूतशब्दानुविद्धप्रत्ययमास्कन्दन्ति चेष्टावन्तः पदार्थाः यथावस्थि-
तार्थप्रतिभास एव च वस्तूनां व्यवस्थापको नान्यथाभूतः अन्यथा अचेष्टावतोऽपि चेष्टावत्तया
शब्दानुविद्धेऽध्यक्षप्रत्यये प्रतिभासस्य(भास इत्य)भ्युपगमे तत्प्रत्ययस्य निर्विषयतया भ्रान्तस्यापि
वस्तुव्यवस्थापकत्वे सर्वः प्रत्ययः सर्वस्यार्थस्य व्यवस्थापकः स्यादित्यतिप्रसङ्गः। तत्र घटनसमयात्
१० प्राक् पश्चाद् वा 'घटः' तद्व्यपदेशमासादयतीत्येवंभूतनयमतम्। उक्तं च—

"एकस्यापि ध्वनेर्वाच्यं सदा तन्नोपपद्यते।
क्रियाभेदेन भिन्नत्वादेवंभूतोऽभिमन्यते" ॥ [ ] इति।

तत् स्थितमेतत् ऋजुसूत्रादयः पर्यायास्तिकस्य विकल्पा इति।
अस्याश्च गाथायाः सर्वमेव शास्त्रं विवरणम् ॥ ३ ॥

## चतुर्थगाथाव्याख्या ।

## [ द्रव्यास्तिकैकप्रकृतिकयोः संग्रह–व्यवहारयोः शुद्धाशुद्धतया भेदनिरूपणम् ]

दव्वट्ठिओ य पज्जवणओ य' इत्यादिपश्चार्द्धैकदेशस्य विवरणाय आह सूरिः—

दव्वट्ठियनयपयडी सुद्धा संगहपरूवणाविसओ ।
पडिरूवे पुण वयणत्थनिच्छओ तस्स ववहारो ॥ ४ ॥

इति गाथासूत्रम् ।

अत्र च संग्रहनयप्रत्ययः शुद्धो द्रव्यास्तिकः व्यवहारनयप्रत्ययस्त्वशुद्ध इति तात्पर्यार्थः ।

अवयवार्थस्तु द्रव्यास्तिकनयस्य व्यावर्णितस्वरूपस्य **प्रकृतिः** स्वभावः **शुद्धा** इत्यसङ्कीर्णा ..पासंस्पर्शवती **संग्रहस्य** अभेदग्राहिनयस्य **प्ररूपणा**—प्ररूप्यतेऽनयेति कृत्वा—उपवर्णना १० संहतिस्तस्या **विषयोऽ**भिधेयः । विषयोपकारेण विषयिणो वृत्तस्य विषयव्यवस्थापकत्वादुपचा . विषयेणा(ण) विषयिप्रकथनमेतत् अन्यथा कः प्रस्तावः शुद्धद्रव्यास्तिकेऽभिधातुं प्रक्रान्ते संग्रहं- .पणाविषयाभिधानस्य ?

### [ संग्रहस्य सत्तामात्रविषयकत्वसाधनम् ]

सुबन्तस्य तिङन्तस्या(स्य) वा पदस्य वाक्यस्य वा प्ररूपणास्वभावस्य विषयः संग्रहाभि- १५ [यि]ेण भाव एव । तथाहि—जाति-द्रव्य-गुण-क्रियापरभावितरूपेण स्वार्थ-द्रव्य-लिङ्ग-कर्मादि- कारेण वा सुबन्तस्य योऽर्थः(र्थः स) भावाद् व्यतिरिक्तो वा भवेत्, अव्यतिरिक्तो वा? दि व्यतिरिक्तस्तदा निरू(रु)पाख्यत्वादत्यन्ताभाववत् न द्रव्यादिरूप इति कथं सुबन्तवाच्यः? व्यतिरिक्तश्चेत् कथं न भावमात्रता सुबन्तार्थस्य? तिङन्तार्थस्यापि क्रिया-काल-कारक-पुरुष- पग्रह-वचनादिरूपेण परिभाष्यमाणस्य सत्तारूपतैव । तथाहि–'पचति' इत्यत्र क्रिया विक्लित्तिल- २० णा, काल आरम्भप्रवृत्ति(प्रभृति)रवर्ग(रपवर्ग)पर्यन्तो वर्तमानस्वरूपः, कारकं कर्ता, पुरुषः परंभा- त्मकः, उपग्रहः परार्थता, वचनमेकत्वम् यद्यपि प्रतिपत्तिविषयस्तथापि सत्त्वमेवैतत् यतः क्रिया सती चेत् कारकैर्न साध्येत खपुष्पादिवत्, सती चेत् अस्तित्वमेव,सा कारकैश्चाभिव्यज्यत इति । एवं ालादयोऽप्यसन्तश्चेद् न शशशृङ्गाद् भिद्येरन्, सदात्मकाश्चेत् कथं न अस्तित्वादभिन्ना इति सत्तैव ङन्तस्यार्थः । 'घटोऽस्ति' इति वाक्यार्थ(र्थे) यद् वाक्यं प्रयुज्यते 'घटः सन्' इति तत्र भावाभि- २५ ायिता पदद्वयस्यापि । तथाहि–'घटः' इति विशेषणम् 'सन्' इति विशेष्यम्; अत्र द्वयेनापि चाभा- 'विपरीतेन भाव्यम् न ह्यन्यथा तद् विशेषणम् नापि तद् विशेष्यं स्यात् निरू(रु)पाख्यत्वाद् अत्य- ाभावचत् । यदि पुनरभावविपरीतं तद् इष्यते, विशेषण-विशेष्ययोः कथं न भावरूपता? तेन देवं पटस्य (घटस्य) भावो घटत्वं तदेव घटः, यच्च सतो भावः सत्त्वं तदेव 'सन्' इति सर्वत्र ग्रहाभिप्रायतः प्ररूपणाविषयो भाव एव । उक्तं चैतत् समयसद्भावमभिधावता अन्येनापि—३०

"अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।

"घटादीनां न चाकाराद्(न्) प्रत्यापयति वाचकः ।
वस्तुमात्रनिवेशित्वात् तद्गतिर्नान्तरीयकैः" ॥ [ वाक्यप० द्वि० का० श्लो० १२५ ] इति
अत एव "यत्र विशेषक्रिया नैव श्रूयते तत्राऽस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्ती
गम्यते" [ ] इत्युक्तं शब्दसमयवेदिभिः । अवगतिश्चैवं युक्ता यदि सत्तां पदार्थो
५व्यभिचरेत्, अव्यभिचारे च तदावेशात् तदात्मकत्वेव सत्तापरित्यागे वा स्वरूपहानमिति सन्मा
मेवाध्यक्षस्य शब्दस्य वा विषयः अन्तर्नी(र्नी)ताशेषम् अपृथग्व्यवस्थापितमधुरादिरसपानकद्र
वत् । भेदप्रतिभासस्तु भेदप्रतिपादकागमोपहतान्तःकरणानां तिमिरोपप्लुतदृशामेकशशलाञ्छनम
लस्यानेकत्वावभासनवत् असत्य इति सर्वभेदान् अपह्नुवानः सर्वं सन्मात्रतया संगृह्णन् संग्र
शुद्धा द्रव्यास्तिकप्रकृतिरिति स्थितम् ।

१० [ व्यवहारस्य विशेषमिश्रितसत्ताविषयकत्वसाधनम् ]

तामेवाऽशुद्धम्(द्धाम्) पडिरूवं पुण इत्यादिगाथापश्चार्द्धेन दर्शयत्याचार्यः—प्रतिरूपं प्र
बिम्बम् प्रतिनिधिरिति यावत् । विशेषेण घटादिना द्रव्येण सङ्कीर्णा सत्ता, पुनरिति प्रकृतिं स्वस्य
तेनायमर्थः—'विशेषेण संकीर्णा सत्ता प्रकृतिः स्वभावः वचनार्थनिश्चयः इति हेयोपादेयो
णीयवस्तुविषयनिवृत्ति-प्रवृत्त्युपेक्षालक्षणव्यवहारसंपादनार्थमुच्यत इति वचनम् तस्य—'घटः'
१५विभक्तरूपतया 'अस्ति' इत्यविभक्तात्मतया प्रतीयमानो व्यवहारक्षमः—अर्थस्तस्य निश्चयः नि
पृथग्भूतः चयः परिच्छेदः तस्य इति द्रव्यास्तिकस्य व्यवहारः इति लोकप्रसिद्धव्यवहारप्र
नंपरः नयः । सोऽभिमन्यते यदि हि हेयोपादेयोपेक्षणीयस्वरूपाः, परस्परतो विभिन्नस्वभावाः
पतया शब्दप्रभवे संवेदने भावाः प्रतिभान्ति ततो निवृत्ति-प्रवृत्त्युपेक्षालक्षणो व्यवहारस्तद्वि
प्रवृत्तिमासादयति नान्यथा; न चैकान्ततः सन्मात्राऽविशिष्टेषु भावेषु संग्रहाभिमतेषु पृथक् स्व
२०पतया परिच्छेद्योऽबाधितरूपो व्यवहारनिबन्धनं संभवतीति । तथाहि—यद्यथाका ( यत् यदाका
रनिरपेक्षतया ... ज्ञाने प्रतिभासमाधत्ते तत् तथैव 'सत्' इति व्यवहर्तव्यम्, यथा ...
सत्तादिरूपम्, घटाद्याकारनिरपेक्षं च पटादिकं स्वावभासिनि ज्ञाने स्वरूपं सन्निवेशयतीति स्व
हेतुः । घटादिनिरपेक्षत्वं च पटादेः घटाद्यभावेऽपि भावात् अवभासमानाञ्च(सनाच्च) सिद्धम

यद्वा प्रतिशब्दो वीप्सायाम् रूपशब्दश्च वस्तुन्यत्र प्रवर्त्तते । तेनायमर्थः—रूपं रूपं
२५वस्तु वस्तु प्रति यो वचनार्थनिश्चयस्तस्य प्रकृति(तिः)स्वभावः स व्यवहार इति । तथाहि
प्रतिरूपमेव वचनार्थनिश्चयो व्यवहारहेतुर्न पुनरस्तित्वमात्रनिश्चयः, यतः 'अस्ति' इत्युक्तेऽपि
शङ्कामुपगच्छन् लक्ष्यते अतः 'किमस्ति' इत्याशङ्कायाम् 'द्रव्यम्' इत्युच्यते, तदपि 'किम्?
सापि का? वृक्षः, सोऽपि कः? चूतः' तत्राप्यर्थित्वे यावत् 'पुष्पितः' 'फलितः' इत्यादि तावन्नि
नोति यावद् व्यवहारसिद्धिरिति । व्यवहारो हि नानारूपतया सत्तां व्यवस्थापयति तथैव संव्य
३०हारसंभवात् । अतो व्यवहरतीति व्यवहार इत्यन्वर्थसंज्ञां बिभ्रत् अशुद्धा द्रव्यास्तिकप्रकृतिर्भवति

---